# श्रीललितासहस्रनाम




प्रकाशक :

कार्यनिर्वहणाधिकारी

तिरुमल तिरुपति देवस्थानम् तिरुपति।

# श्रीललितासहस्रनाम

## भास्कररायप्रणीतसौभाग्यभास्करभाष्योपेतम्



सम्पादकः

**डा० एस्० बि० रघुनाथाचार्यः**

रीडर् संस्कृतविभागः, श्रीवेङ्कटेश्वरविश्वविद्यालयः, तिरुपति






प्रकाशकः

**श्री एस्० लक्ष्मीनारायणः, ऐ० ए० एस्०**

कार्यनिर्वहणाधिकारी

**तिरुमल तिरुपति देवस्थानम्, तिरुपति।**

**१९८५**

SRI LALITĀSAHASRANĀMA
with the Soubhāgyabhāskara Commentary of Bhāskararāya

*Edited by :*
Dr. S. B. Raghunathacharya

T. T. D. Religious Publication Series No :

First edition : 1985
Copies : 1,00



*Published by*
Sri S. Lakshminarayana, I. A. S.
*Executive Officer,*
Tirumala Tirupati Devasthanams,
Tirupati.



*Printed at :*
Tirumala Tirupati Devasthanams Press,
Tirupati.

# प्रस्तावना

**डा॰ एस्॰ बि॰ रघुनाथाचार्यः**
रीडर् संस्कृतविभागः
*श्री वेङ्कटेश्वरविश्वविद्यालयः*
तिरुपति।

इह खलु सुखप्राप्तिमहितनिवृत्तिञ्च कामयमानाः प्राणिनः धर्मार्थ-कामरूप त्रिवर्गमुपसेवमाना दरीदृश्यन्ते। अनुष्ठानपर्यवसायि तत्त्व-शास्त्रमिति भारतीयानामस्माकं सुदृढोऽभिसन्धिः।धर्मार्थकामरूपत्रिवर्गसं-सेवनं यदि यथाविधि सनियमं सम्पद्यते तर्हि तन्मोक्षरूपं फलं प्रसुवीतेति निश्चप्रचम्। तत्रापि हि द्वयी गतिः; कर्मज्ञानभेदेन। परापरतत्त्वविदां परमानन्दैकस्वरूपाणां ज्ञानिनामन्यः पन्थाः। कर्ममार्गमनुगच्छतां ताव-त्फणितिरन्या।

कर्ममार्गावलम्बिषु जनेषु केचन स्वसम्प्रदायानुरोधं वैदिकं धर्म-मातिष्ठमानाः स्वाभिलषितानर्थान् साधयन्ति। अन्ये च पुनस्तान्त्रिकाः देवीपूजापरायणाः स्वकामनाः सफलयन्ति। यद्यप्यैहिकसुखस-म्पादने चकास्ति भेद उभयोरपि; अथापि परमपुरुषार्थः मोक्ष इत्यत्र नास्त्यल्पीयान् भेदः। तत्र देव्यास्त्रिपुरसुन्दर्याः प्रभावः समाराधनप्रकारश्च सुन्दरीतापिनीपञ्चकं, भावनोपनिषत्, कौलोपनिषत्, गुह्योपनिषत्, महोपनिषत् प्रभृतिषु ग्रन्थेषु सप्रपञ्चमुपदिष्टौ। एतच्छेषभूततया परशुरामकल्पसूत्राणि यामलादितन्त्राणि च सम्प्रवृ-त्तानि। कर्म-ज्ञानकाण्डोपबृंहणार्थं समुत्पन्नेषु पुराणेष्वपि देव्या महत्वं तत्र तत्र विशेषतः प्रत्यपादि।

मन्त्रशास्त्रतत्त्वप्रतिपादकेषु ग्रन्थेषु बहुसंख्याकेषु विद्यमानेष्वपि समुल्लसत्येव समुन्नतं स्थानं श्रीललितानामसहस्रस्य। एतदन्तर्गतं

रहस्यजातं दुरवगाहं सद्गुरुसमुपदेशमात्रसंवेद्यम्। दुष्करमेतद्व्याख्यानं अनधीतवेदवेदान्तमीमांसातर्कव्याकरणादिशास्त्रजातस्य अदीक्षितस्य विपश्चितः। एतन्मनसि निधाय शिष्यानुजिघृक्षया पदवाक्यप्रमाण-पारावारपारीणः, सर्वतन्त्रस्वतन्त्रः, श्रीमन्नृसिंहयज्वपदपाथोजप्रवणः, भारत्युपपदः, श्रीमद्गम्भीररायतनयः अन्वर्थनामधेयो भास्करराय: श्रीललितानामसहस्रस्य सौभाग्यभास्कराभिधं भाष्यं प्रणिनाय। अस्यैव भास्कररायस्य दीक्षानाम भासुरानन्दनाथ इति।

## जीवितसङ्ग्रहः

महोदयश्चासौ निजजनुषा कतमं भूभागं पवित्रीचकारेत्यत्र नातीव स्पष्टमवगम्यते। किन्तु एतच्छिष्येण जगन्नाथनाम्ना प्रणीतात् भुवनाभोगापरनामकात् श्रीभास्करविलासकाव्यात् केचिदंशा एवम-स्माभिः ज्ञातुं शक्यन्ते।

भास्करराय: कोनमाम्बा - गम्भीररायययोः द्वितीयः पुत्रः। अयं महाराष्ट्रदेशे विजयपुरमण्डले तनुजनामकेऽग्रहारे क्रीस्तोः परं सप्तदशशतकान्ते लब्धजन्माऽभूत्। शैशवेऽसौ भागानगरे कञ्चि-त्कालमुवास। ततः परं वाराणस्यां कृतभूरिपरिश्रमः सर्वासु विद्यासु अनितरसाधारणं वैदुष्यं समपीपदत्। गच्छति कालेऽयं सूरत् नगरे शिवदत्तशुक्लसन्निधौ श्रीविद्यायां पूर्णाभिषेकं प्राप्य भासुरानन्दनाथ इति दीक्षानाम लेभे। पश्चादयं दक्षिणभारते कृष्णातीरे, कावेरीतीरे च बहुकालं न्यवसत्। तञ्जापुरमण्डले भास्करपुरमिति एतन्नाम्ना अग्रहारः कश्चिदासीत्। तत्रैव बहुकालमुषित्वा अन्ते तत्समीपस्थिते मध्यार्जुनपुरेऽसौ देवीपादसन्निधिमगादिति कथयन्ति वृद्धाः।

## कृतयः

सकलशास्त्रपारदृश्वाऽसौ भास्करराय: अष्टत्रिंशत्संख्याकान् ग्रन्थान् प्रणिनायेति महती प्रसिद्धिः। सौभाग्यभास्करभाष्ये तत्र तत्र

# FOREWORD

Eulogies are very famous in Sanskrit literature. Our scriptures are rich in Stotras on many deities. In order to praise a deity in divergent aspects, one should compose "Sahasranāma", a stotra which contains thousand names of a particular deity. Hence a Sahasranāma occupies an important place in daily worship.

Among all the Sahasranāmas available, Sri Vishnusahasranāma is remarkable in many respects. Likewise, Sri Lalitāsahasranāma is also a great one. Although many scholars commented upon Sri Lalitāsahasranāma, the "Soubhāgyabhāskara" commentary of Sri Bhāskararāya excells all the other commentaries. It drives home many knoty points of our philosophical systems. Hence, we are publishing now Sri Lalitāsahasranāma along with the Bhāṣya of Sri Bhāskararāya for the benifit of Devi devotees. We hope this great work will enlighten the Devi devotees for better spiritual life.

In this connection I congratulate Dr. S.B. Raghunathacharya, a distinguished scholar in the field of Sanskrit Shastras for the good job done in editing this work.

*Tirupati,*
19-6-85.

*S. LAKSHMINARAYANA*
EXECUTIVE OFFICER
T.T. DEVASTHANAMS, TIRUPATI.

# कृतज्ञताविष्करणम्

एतत्पुस्तकसम्पादने कार्वेटिनगरसंस्थानस्य, निर्णयसागरमुद्रणालयस्य अडयारस्थदिव्यज्ञानसमित्याश्च संस्करणानि पाठसंवादार्थं यथावसरं मया समुपयुक्तानि। तदर्थं तत्तदधिकारिभ्यः नितरामहं कृतज्ञः। अस्मिन् व्यतिकरे ललितानामसहस्रभाष्यस्य निर्णसागरसंस्करणप्रदानेन, कार्वेटिनरगसंस्थानसंस्करणप्रदानेन च सदयं मामनुगृहीतवन्तः क्रमेण प्रियसुहृन्मणयः प्रो॰ एम्॰ डि॰ बालसुब्रह्मण्यमहोदयाः (प्राचार्याः केन्द्रीयसंस्कृतविद्यापीठम्, तिरुपति) प्रो॰ पि॰ श्रीरामचन्द्रुडु महाभागाः (आचार्याः संस्कृतविभागः, उस्मानिया विश्वविद्यालयः, हैदराबाद्)। तदर्थं सनमोवाकं कार्तज्ञ्यमाविष्करोमि। सौभाग्यभास्करवैशिष्ट्यमधिकृत्य स्वप्रकटितं पत्रं प्रेषितवतां प्रियसुहृन्मणीनां प्रो॰ पि॰ जि॰ लालेमहोदयानां (आचार्याः, संस्कृतविभागः, उस्मानिया विश्वविद्यालयः, हैदराबाद् भृशं कृतज्ञोऽसौ जनः।

महता परिश्रमेण सम्पादितमिमं ग्रन्थं प्रकटनाय स्वीकृतवतां तदानीन्तनकार्यनिर्वहणाधिकारिणां श्रीमतां पि॰ वि॰ आर्॰ के॰ प्रसादमहोदयानां, तथा अद्यतनकार्यनिर्वहणाधिकारिणां श्रीमतां एस्॰ लक्ष्मीनारायणमहोदयानां च हार्दं कार्तज्ञ्यमाविष्करोमि।

मुद्रणकार्यं सप्रेम निर्वर्तितवते प्रियमित्राय श्री एम्॰ विजयकुमाररेड्डिमहोदयाय तथा उपकृतवते श्री एम्॰ गोपालरेड्डिनाम्ने तत्सहकारिबृन्दाय च कृतज्ञोऽयं जनः। सावधानं शोधने कृतेऽपि तत्र तत्र स्खालित्यानि अवस्थितान्येव। अतः पाठका याच्यन्ते मर्षणाय।

**ललिता परमेश्वरी कृपा-**
**कलिता रक्षतु भक्तमण्डलीम्।**

*क्रोधनवत्सरादिः*
२२. ३. १९८५

*— एस्॰ बि॰ रघुनाथाचार्यः*

अनेनैव केचन ग्रन्थाः स्वकीयाः निरदेशिषत। १. चण्डभास्करम् २. वादकौतूहलम् ३. रसिकरञ्जनी ४. न्यायमण्डनम् ५. छन्दःकौस्तुभम् ६. मधुराम्लम् ७. शिवस्तवः ८. शिवदण्डकम् ९. शिवाष्टोत्तरशत-व्याख्यानम् १०. स्तुतितत्त्वम् ११. प्रदोषभास्करम् १२. तृचभास्करम् १३. कुण्डभास्करम् १४. भावनोपनिषद्भाष्यम् १५. श्रीसूक्तभाष्यम् १६. कौलोपनिषद्भाष्यम् १७. सेतुबन्धः १८. वरिवस्यारहस्यम् १९. रत्नालोकः २०. देवीस्तवः २१. वरिवस्याप्रकाशः २२. श्रीललितासह-स्रनामभाष्यं सौभाग्यभास्करमिति केचन प्रसिद्धाः ग्रन्थाः भास्कर-रायस्य। येषु वरिवस्यारहस्यं, सौभाग्यभास्करं, सेतुबन्ध इति ग्रन्थ-त्रितयं श्रीविद्योपासकानां अत्यन्तमुपकुरुत इत्यत्र न कोऽपि संशीति-लेशः।

## समकालिकाः

भास्कररायस्य समकालिकाः श्रीकुङ्कुमानन्दस्वामिनः, नारायणभट्टः, उमानन्दनाथः, जगन्नाथः इत्यादयः। एतेषु नारायणभट्टः भास्कररायस्य प्रतिस्पर्धी। अन्तिमौ तु तच्छिष्यौ।

## ललितासहस्रनाम

प्रायः सहस्रनामानि तत्तद्देवताकानि तेषु तेषु पुराणेषु समुपल-भ्यन्ते। श्रीललितादेव्या नामसहस्रमपि ब्रह्माण्डपुराणात् संगृहीतम्। देवीनामसहस्रमिदं ब्रह्माण्डपुराणोत्तरखण्डे त्रिष्वध्यायेषु विंशत्युत्तरत्रि-शतश्लोकेषु अगस्त्याय हयग्रीवेण समुपदिष्टम्।

## भाष्याणि

श्रीललितानामसहस्रस्य पञ्च भाष्याणि समुपलभ्यन्ते। श्री विमलानन्दनाथस्य शिष्येण श्रीविमर्शानन्दनाथेन कृतं भाष्यं प्रथमम्। श्री अनन्तारण्यशिष्यस्य विद्यारण्यमुनीश्वरस्य भाष्यं द्वितीयम्। श्री भट्टनारायणस्य भाष्यं तृतीयम्। शङ्करनाम्ना कृतं भाष्यं चतुर्थम्।

श्री भास्कररायेण कृतं सौभाग्यभास्करभाष्यं पञ्चमम्। उक्तपूर्वेषु सर्वेष्वपि भास्कररायभाष्यं सर्वथा सुप्रसिद्धम्।

## प्रकृतसंस्करणम्

सौभाग्यभास्करव्याख्यया साकं ललितासहस्रनामग्रन्थः प्रकाशनीय इति तिरुमल तिरुपति देवस्थानस्य तदानीन्तनकार्यनिर्वहणाधिकारिणः दिगन्तविसारियशस्सम्पन्नाः श्रीमन्तः पि॰ वि॰ आर्॰ के॰ प्रसादमहोदयाः यदा मामादिक्षन् तदाऽहं अधोनिर्दिष्टान् मुद्रितान् ललितासहस्रनामग्रन्थान् समपादयम्।

१. श्रीललितारहस्यनामसहस्रभाष्यम्
   श्रीकार्वेटिनगरसंस्थानेन आन्ध्रलिप्यां मुद्रितम्
   कार्वेटिनगरम्, आन्ध्रप्रदेशः, १८९०

२. ललितासहस्रनाम
   भास्कररायप्रणीतासौभाग्यभास्करभाष्योपेतम्
   श्रीवासुदेवलक्ष्मणशास्त्री पणशीकरेण सम्पादितम्
   निर्णयसागरमुद्रणालयः, बोम्बई, १९११.

3. Lalitasahasranaman (Text)
   with Bhaskararaya's commentary
   translated into English by R. A. Sastry
   The Theosophical Publishing House
   Adyar, Madras– 1951.

उपरितनमुद्रितग्रन्थानां अमुद्रितानाञ्च सम्प्रदायप्राप्तानां केषाञ्चित्साहाय्येन मूलपाठं परिष्कृत्य, भाष्यपङ्क्तिष्वपि कार्वेटिनगरसंस्थानप्रकटितं पाठं अधस्तात् सूचयन् प्रकृतसंस्करणमहं समपादयम्। नेदं विमर्शात्मकं संस्करणम्। किन्तु यथावकाशं पाठशोधनमस्मिन् कृतमिति विज्ञाप्यते।

आ प्राचः कामरूपाद्द्रुहिणसुतनदप्लाविताद प्रतीचो
गान्धारात्सिन्धुसार्द्राद्रघुवरचरितादा च सेतोरपाचः।
आ केदारादुदीचस्तुहिनगहनतः पुण्यदेशानशेषां-
स्तीर्थान्यग्र्याणि पीठान्यपि च दिविषदां सैष साक्षादकार्षीत्॥ ॥ १८ ॥

कामरूपात्परं नाम रूपाभिधं दृष्टवान्नीवृतं दूरतः केवलम्।
पापभीरुर्यदा भूपतेरासते तत्र नार्यः पुमांसोऽपि दिग्वाससः॥ ॥ १९ ॥

स एष **गङ्गाधरवाजपेयि**सकाशतः साधितगौडतर्कः।
गङ्गावगाहाद्विरजाः पितृणां गतोऽनृणत्वं सुकृती गयायाम्॥ ॥ २० ॥

शिवभक्त्यामुपमन्युः शिवपदाब्जार्हणे हयग्रीवः।
यः पुण्डरीकनयनोपास्ताविह जगति पुण्डलीकोऽभूत्॥ ॥ २१ ॥

साचालोऽखिलतीर्थेष्वाचारो वृद्धिमान्प्रचारणया।
आत्मविचारः सन्ततमव्यभिचारः शिवेऽस्य भावोऽभूत्॥ ॥ २२ ॥

आनन्दी परिणिन्येऽसावानन्दीनामिकां प्रियाम्।
सानन्दयन्मनो भर्तुर्मानं दत्त्वा तु पृष्ठतः॥ ॥ २३ ॥

सावरणापत्रपया सालंकारा शुभेन शीलेन।
सापत्या शिष्यैरपि साध्वीनां स्तूयते हि धुर्येषा॥ ॥ २४ ॥

अन्तरङ्गमतयाऽथ तयासावन्तरङ्गविहृतिं विदधानः।
पाण्डुरङ्गमभजत्सुतमाशाः पाण्डुरं गमयति स्म यशो यः॥ ॥ २५ ॥

त्रयीमधीत्याधिगतार्थमेष त्रेता यथाकालमथादधानः।
आम्नायमाथर्वणमप्रचारमध्यैष्ट चाध्यापिपदग्रजातीन्॥ ॥ २६ ॥

देवीभागवतं नाम पुराणं प्रोक्तलक्षणम्।
आनीय प्रकटीचक्रे दानी पात्रेष्वदाम्भिकः॥ ॥ २७ ॥

सारल्यशालिचेताः सारं श्रीरामभद्रचरितस्य।
अष्टमम**द्भुतकाण्डं** स्पष्टदशां प्रापयत्खिलीभूतम्॥ ॥ २८ ॥

भासुरानन्दनाथाख्याद्भासुरो दीक्षया स्वयम्।
पद्मावत्यम्बिकेत्याख्यां चकार सुदृशः सुधीः॥ ॥ २९ ॥

**शिवदत्तशुक्ल**चरणासादितपूर्णाभिषेकसाम्राज्यः।
गुर्जरदेशे विदधे जर्जरधैर्यं स वल्लभाचार्यम्॥ ॥ ३० ॥

वादे मस्करिणं माध्वं विधूयामुष्य बन्धुजाम्।
**पार्वतीं** व्यवहत्कीर्त्या समं सत्यप्रतिश्रवाः॥ ॥ ३१ ॥

आसृष्टेरनुवर्तमानमभितः श्वश्रूस्नुषाभावजं
वैमुख्यं परिहृत्य तादृशमिह स्वस्मिन्स्वकीयेषु च।
अन्योन्यं कमलाविरिञ्चिसुदृशोरातन्वतः सङ्गतं
**श्रीमद्भास्करयज्वन**श्चतुरता वाचा कथं वर्ण्यते॥ ॥ ३२ ॥

काश्यां जज्ञे सोमपीथी यथावत्कालं कंचित्तत्र कृत्वा विहारम्[1]।
शिष्यस्यासौ **चन्द्रसेनस्य राज्ञः** सेवातुष्टयोवास कृष्णोपकण्ठम्॥ ॥ ३३ ॥

**यादववंशैकमणि**र्यो भोसलभूभृतश्चमूनाथः।
श्रीगुरुचरणोपास्तौ स्वयमेव प्रापदुपमितिं स्वस्य॥ ॥ ३४ ॥

अनेकाग्रहारप्रतिष्ठागरिष्ठः शिवश्रीधराद्यालयोल्लासनिष्ठः।
अजस्रप्रवृत्तान्नसत्रो वसिष्ठः स पूर्तानि चक्रे बहून्यार्तबन्धुः॥ ॥ ३५ ॥

**चक्रेश**मस्थापयदेष काश्यां **गम्भीरनाथं** किल कोङ्कणेषु।
मूलह्रदे श्रीमति **पाण्डुरङ्गं वज्रेश्वरं** नाम च सेतुबन्धे॥ ॥ ३६ ॥

सन्नतिमान्नाथपदोः सन्नतिनाम्नेह विश्रुते क्षेत्रे।
चक्रे स मन्दिरं श्रीचक्राकारेण **चन्द्रलाम्बायाः**॥ ॥ ३७ ॥

बहोः कालात्किलाशेषमदश्चोलेषु नीवृति।
**कहोलेश**मसौ चक्रे महोत्सवनिरन्तरम्॥ ॥ ३८ ॥

१. 'निवासम्' इति पाठः

# श्रीभास्करविलासकाव्यम्

## (भुवनाभोगाख्यम्)

## श्रीभास्कररायान्तेवासि श्रीजगन्नाथप्रणीतम्

श्रेयोमार्गनिरूपणाय शरणापन्नेषु बद्धादरा
दुर्वारप्रतिवादिचक्रविमलीकारप्रकारोत्तराः।
साष्टाङ्गप्रणमन्नरेन्द्रमुकुटीरत्नप्रभामेदुराः
श्रीमद्भास्करभारतीपदनखज्योत्स्नाङ्कुराः पान्तु नः॥ ॥ १ ॥

पश्यतु पदेन वेदान् व्यस्यतु वल्मीकतोऽप्युदेत्वथवा।
अस्य भुवि भास्करेन्दोः कस्य न जिह्रेतु धीर्गुणान् गातुम्॥ ॥ २ ॥

क्वाहं मन्दतमप्रज्ञः क्व गुरोर्गुणगौरवम्।
तथाप्युपश्लोकयामि तन्वानः सफलां गिरम्॥ ॥ ३ ॥

गम्भीरसत्वः कुशिकान्ववाये गम्भीररायोऽजनि गेयकीर्तिः।
श्रुतेन शीलेन धिया नयेन श्रिया च यः स्वं गुरुमन्वकार्षीत्॥ ॥ ४ ॥

विजयपुरसार्वभौमो विवृतमहाभारतस्तदुक्त्या यः।
विद्यासु भारती सन्नुपनाम्नाप्यत्र भारती ववृते॥ ॥ ५ ॥

तेनाभिपन्ने तनुजेऽग्रहारे कोनाम्बिकायां किल मध्यरत्नम्।
प्रकाशको भास्करवज्जगत्याः प्रधीरभूद्भास्कररायनाम्ना॥ ॥ ६ ॥

प्रादुर्भूतः सैष भागानगर्यां पुर्यां काश्यां तातपादोपनीतः।
अन्तेवासी सन्नृसिंहाध्वरीन्द्रोरस्माद्विद्याः प्रापदष्टादशापि॥ ॥ ७ ॥

स बालभावे जनकोपदिष्टसारस्वतोपासनया नयाढ्यः।
विद्याः समस्ताः सकलाः कलाश्च विनापि यत्नेन वशे चकार॥ ॥ ८ ॥

सप्तवर्षोऽपि युक्त्या यः सभेश्वरपतेर्मनः।
सभेशभक्तो भूपालसभे कस्मिन् जयी न सः॥ ॥ ९ ॥

शृण्वन्नेत्रस्य वीप्सा खलु पदविषयेऽपश्यदह्नेर्विभाषा
न्याये नव्येऽप्यनव्येऽप्यथ च परिणतिर्जैमिनेर्वाक्यजाते।
छान्दोंऽशे पिङ्गलोऽन्यः श्रुतिशिखरमते सत्यवत्यास्तनूज-
स्तन्त्रेष्वेव स्वतन्त्रा गिरिशगुणनिका कीर्त्यते कीर्तनीयैः॥ ॥ १० ॥

त्यक्तन्यग्रोधमूलः किमु शशिमुकुटः किंस्विदेकास्यशेषो
नागः शेषोऽयमाहो गुरुरमृतभुजामाहतक्ष्माविहारः।
किं विद्यानां समष्टिर्जगति विविधतां भेजुषीणामुदञ्च-
त्पुंभावा भारती वेत्यखिलबुधजनैर्भावितो **भारतीन्दुः**॥ ॥ ११ ॥

महः कापिलं सांख्यतन्त्रे फणिभ्यामनन्यं च योगे विधौ छन्दसां च।
कृतं संख्यया सर्वविद्यानिषद्यां यमाहुर्महीमण्डले पण्डितेन्द्राः॥ ॥ १२ ॥

चार्वाकस्योक्तिरर्वागजनि समकुचद्बौद्धराद्धान्तभङ्गी
भाट्टो हट्टो विनष्टो व्यरमदथ [illegible] पश्य पश्यत्पदस्य।
योगोऽभूदस्तयोगस्त्रिजगति फणितिः कापिली सापि लीना
ध्वान्तञ्च ध्वंसिताध्वा श्रुतिशिखरमतस्थापके **भास्करार्ये**॥ ॥ १३ ॥

प्रतिद्वन्द्विसूरिच्छटावादकण्डूविलोपैकलीलाभृदन्तेवसन्तम्।
उपन्यासधाटीविधूतामरेड्यं विजेतुं तमीष्टां विपश्चिद्व्रजे कः॥ ॥ १४ ॥

संक्षुद्य खण्डमसकृत्सिक्त्वा मधुना विधिः कवेरस्य
किं निरमिमीत रसनामिति माधुर्या यदुल्लसन्ति गिरः॥ ॥ १५ ॥

माध्वी साध्वी न जज्ञे जगति परिणता गोस्तनी चास्तनीचा
न्यक्कारं शर्करागान्मधुरिमणि भृशं भिक्षुतां प्रापदिक्षुः।
प्रक्षीणा क्षीरकाङ्क्षा समजनि मधुनो माधुरी चाधुरीणा
मोचाप्याचान्तदर्पा भणितिषु मखिनो भारतीख्यातिभाजः॥ ॥ १६ ॥

यस्याऽदृष्टो नास्ति भूमण्डलांशो यस्याऽदासो विद्यते न क्षितीशः।
यस्याऽसाध्या नास्ति विद्या किमन्यैर्यस्याकारः सा परा शक्तिरेव॥ ॥ १७ ॥

साध्वी तदग्रसुदती सह्यसुतातीरभूपरिष्कारे।
भास्करपुरेऽग्रहारे बद्धावृति **भास्करेश्वरं** न्यधित॥ ॥ ३९ ॥

यदि श्रीर्नो विद्या भवति यदि सा नैव विनयः
न चेन्नो दातृत्वं तदपि यदि न स्यान्मृदु वचः।
इति स्मायं लोके नियतमसमानाधिकरणो
गुणग्रामः पूर्णो जगति ववृधे **भास्करबुधे**॥ ॥ ४० ॥

नवस्यन्दिमाध्वीकधारानुकारप्रकारोल्लसत्साहितीसौहितीकः।
विनिश्वासकल्पं भुवः कल्पशाखी [illegible] प्रबन्धान्प्रबन्धास नैकात्? ॥ ४१ ॥

दान्तेषु वर्यैर्वेदान्ते नितान्तेडितनैपुणः।
अतनोदान्तरध्वान्तखण्डकं **चण्डभास्करम्**॥ ॥ ४२ ॥

लीलामात्रेरितया नीलाचलपूर्वया चपेटिकया।
विमतादृतं **प्रहस्तं** व्यतनिष्ट विहस्तमब्जनिभहस्तः॥ ॥ ४३ ॥

पूर्वमीमांसकाग्रेसरैः श्लाघितः पूर्वमीमांसयोद्दामकक्ष्याकुलम्।
**वादकौतूहलं** नाम चक्रे कृती वादकौतूहली सूनुनासौ गुरोः ॥ ४४ ॥

**चन्द्रोदयं** च **भाट्टोपपदं** भट्टारकः प्रवीणानाम्।
मध्यायाः कौमुद्या अपि टीकां **रसिकरञ्जनीं** विदधे॥ ॥ ४५ ॥

प्रतिवादिशिरोघट्टकुट्टाकप्रतिभाभरः।
तार्किकाणां मण्डनं स ततान **न्यायमण्डनम्**॥ ॥ ४६ ॥

छन्दसि **सौत्रं भाष्यं छोटीवृत्तिं** प्रवृत्तिमान्धर्मे।
**वार्तिकराजं वृत्तोपपदं चन्द्रोदयं** च चक्रेऽसौ॥ ॥ ४७ ॥

वस्तुमर्हो धुरि सतां वस्तुतः पिङ्गलापरः।
स स्तुतं प्राणय**च्छन्दःकौस्तुभं** विबुधोत्तमैः॥ ॥ ४८ ॥

विद्वन्मनोनन्दनचन्द्रशालां तद्वत्प्रणिन्ये [illegible] **चन्द्रशालाम्**।
प्रधीः [illegible] लोभनीयपदार्थपूर्णामिह लब्धवर्णः॥ ॥ ४९ ॥

**मधुराम्लं** व्यधात्काव्यं मधुराम्लरसप्रियः।
**सुभाषितं भास्कराङ्कं** बभाषे मृदुभाषितः॥ ॥ ५० ॥

प्रचण्डं दुरितव्रातखण्डने **शिवदण्डकम्**।
**मुक्तकानि** च पद्यानि मुक्तावद्यान्ययं जगौ॥ ॥ ५१ ॥

तत्त्वज्ञः **स्मृतितत्त्वाख्यां** कृतिं सत्त्वगुणाश्रयः।
मर्मविद्धर्मशास्त्रस्य कर्मठः सैष निर्ममे॥ ॥ ५२ ॥

**सहस्रब्राह्मणभुजिविधिखण्डस्य** विश्रुतः।
बौधायनप्रणीतस्य बुधो **व्याख्या**मरीरचत्॥ ॥ ५३ ॥

**शङ्खचक्राद्यङ्कनस्य** स शङ्खलिखितोपमः।
**प्रायश्चित्तं** जगादैकादश्या अपि **विनिर्णयम्**॥ ॥ ५४ ॥

**प्रदोषभास्करं** चक्रे **तृचभास्कर**मप्यसौ।
**कुण्डभास्कर**संज्ञां च कृतिं भास्करपण्डितः॥ ॥ ५५ ॥

नानाविधैरसौ वृत्तैर्ना**मामष्टोत्तरं शतम्**।
अष्टमूर्तेरतिस्पष्टं व्याचष्टे स्म विशिष्टधीः॥ ॥ ५६ ॥

**गणेशनामसाहस्रव्याख्यां** विख्यातिमान्गुणैः।
**खद्योतनाम्नीं** निष्पाद्य व्यद्योतिष्ट स भास्करः॥ ॥ ५७ ॥

**स्कान्दीयं चन्द्रलाम्बाया**श्चन्द्रोपममुखद्युतिः।
**माहात्म्यं** ख्यातमाहात्म्यो **व्याचख्या**वतिविस्तृतम्॥ ॥ ५८ ॥

मत्तप्रतिवदवदनप्रत्तजनानुत्तरत्वमुद्राकः।
**नाथनवरत्नमालामञ्जूषां** मञ्जुलां जुगुम्फासौ॥ ॥ ५९ ॥

**भावनोपनिषद्भाष्यं सप्रयोगं** स भाविकः।
चक्रे **श्रीसूक्तभाष्यं** च चिरं परिचितः श्रिया॥ ॥ ६० ॥

**कौलोपनिषद्भाष्यं** कुलजैः सेव्यो जनैश्चकारासौ।
**त्रैपुरमहोपनिषदं** त्रैपुरसिद्धान्तविद्विवव्रे सः॥ ॥ ६१ ॥

**ललितानामसाहस्रभाष्यं** भाष्यकृतां समः।
**सौभाग्यभास्कराख्यं** स भाग्यलब्धं व्यधात्सुधीः॥ ॥ ६२ ॥

सौभाग्यरत्नाकरभाग्यहेतुं **सौभाग्यचन्द्रोदय**मागमज्ञः।
श्रीरामवन्निर्धुतपापबन्धं चकार चात्यद्भुत**सेतुबन्धम्**॥ ॥ ६३ ॥

भास्करकुलजेन पुरा बद्धः सेतुः स्वयं तरितुमब्धिम्।
**भास्कररायेण** जगत्तारयितुं भवपयोधिरयमरचि॥ ॥ ६४ ॥

**वरिवस्यारहस्यं** च **वरिवस्याप्रकाशकम्**।
वरिवस्यापरैरेव वरिवस्यमचीकरत्॥ ॥ ६५ ॥

जामदग्न्योपज्ञकौलकल्पसूत्रस्य सूत्रवित्।
**रत्नालोकाभिधां वृत्तिं** यत्नादेष विना व्यधात्॥ ॥ ६६ ॥

**मालामन्त्रोद्धारं** गुणमणिमालापरिष्कृतोऽव्याख्यत्।
**गुप्तवतीं सप्तशतीटीकामपि** लुप्तसंशयां विदधे॥ ॥ ६७ ॥

सर्वज्ञो विशदां सप्तशतीमन्त्रविभाजिकाम्।
प्रणिनाय **शतश्लोकीं** पुण्यश्लोकपदोचितः॥ ॥ ६८ ॥

असंख्याता हि कृतयः संख्याता अपि विष्टपे।
संख्यातुं केन शक्यन्ते संख्यावच्चक्रवर्तिनः॥ ॥ ६९ ॥

**इत्येवं श्रीमद्भास्कररायप्रणीतानां केषांचिद्ग्रन्थानां निर्देशः।**

तत्सार्वज्ञ्योपज्ञकानि प्राज्ञहृद्यानि कानिचित्।
अद्याहमनवद्यानि पद्यानि प्रतिपादये॥ ॥ ७० ॥

श्रीरामं प्रतिपुष्कराभिधमहायक्षेण वेदत्रय-
व्याख्यानावसरे विशिष्य कथितं श्रीविष्णुधर्मोत्तरे।
एतां धेनुमुपह्वयामि सुदुघामित्यृग्गतं **शङ्करा-**
**चार्यं** शिष्यचतुष्टयेन सहितं वन्दे गुरूणां गुरुम्॥ ॥ ७१ ॥

**वर्षेष्वतीतेषु शकेषु षट्सु** [illegible] **भुवि शङ्करार्यम्।**
शिष्यैश्चतुर्भिः सहितं शिवादिपारम्परीकावधिमानमामः॥ ॥ ७२ ॥

हन्ताहन्ताहन्तान्तर्वाणिगणस्य तत्त्वभुवि रन्ता।
ध्वन्यध्वन्यध्वन्यः **श्रीनरसिंहाध्वरी** गुरुर्धन्यः॥ ॥ ७३ ॥

साक्षाद्द्राक्षासमक्षापतदमृतझरीमाधुरी साधुरीति-
र्मल्लीवल्लीमतल्लीकुसुमपरिमलाखर्वगर्वापहन्त्री।
भाषा येषामशेषा विनटदजजटाजूटसंभ्रान्तगङ्गा
तुङ्गत्वङ्गत्तरङ्गध्वनिमधरयते तान्नुमः **श्रीनृसिंहान्**॥ ॥ ७४ ॥

विधिविष्णुमुखामरोदयस्थितिनाशेषु शिवोऽप्यनीश्वरः।
जगदम्ब तव त्वयं क्रमः क्षणमुद्दालकपुष्पभञ्जिका॥ ॥ ७५ ॥

शिरःस्थशशलक्षणं त्रिपुरदैत्यसंतक्षणं
दुरन्तविषभक्षणं सुरनिकायसंरक्षणम्।
नरीनरविलक्षणं रविकृशानुचन्द्रेक्षणं
स्मरार्दनविचक्षणं **परशिवं** भजेऽनुक्षणम्॥ ॥ ७६ ॥

चायं चायं दुरितनिचयं सीदतां वत्त्न्युपायं
पायं पायं शमितकलुषं कार्ष्णमम्भोऽनपायम्।
ध्यायं ध्यायं विषयकटुतां भोश्चिरायोरुगायं
गायं गायं विहरत विभुं **वेणुगोपालनाट्यम्**॥ ॥ ७७ ॥

इदमहमोरुभयोरपि यदस्ति नियतावभासकं भानम्।
तस्यापि साक्षिणी चित्तदुपाधिविनाकृताप्यस्ति॥ ॥ ७८ ॥

तद्दत्तैश्वर्यभाजः परमशिव कथंकारमन्यानमर्त्यान्
याचे देहीति विष्णुद्रुहिणहरिमुखान्भिक्षुकान्भिक्षुकोऽहम्।
यत्तावद्द्वादशाहक्रतुविकृतिशतोक्थ्यात्मभूतोऽपि चोक्थ्यो
ज्योतिष्टोमोक्तधर्मानभिलषति नतु द्वादशाहोक्थ्यधर्मान्॥ ॥ ७९ ॥

आलोलोच्यक्ति सूरिसंप्रतिपनीपन्नांश्चनीकारयन्
शब्दान्संसदि [illegible] ॥

कीर्तिस्तस्य वरीवधीतकि जनाः सर्वेऽपि चाकत्थति
स्वर्गं चाभिपनीपदीतकि न चैतेभ्यः सनीस्रस्यते॥ ॥८०॥

भृश्यत्कूलकुकूहनाथ हरिणा जाल्मत्वमध्यापितान्
धिग्दण्डाजिनिकान्धकिद्धकिदिहायश शूलिकान्पार्थकान्।
ब्रह्मात्मैक्यपरो नु योऽनुरहसं यायावरः सस्यको
मर्त्यत्रा समयाकरोति विधिवत्तेनास्त्वजर्यं मम॥ ॥८१॥

द्रव्याश्रयी गुणोऽथ च दुःखध्वंसो विमुक्तिरिति च मुनिः।
ऋतमाह गौतमोऽसौ त्रिभुवनमपि साक्षि यदिह सानुभवम्॥ ॥८२॥

द्वित्रप्रस्तरखण्डगर्भकुतुपध्मानभ्रमाधायिवाक्
चेद्वैयाकरणो मनागपि रसं काव्यस्थितं विन्दति।
तन्वाने रसितार्भटीं गतरसां मध्येनभः शारदे
निघतैर्बधिरीकृतश्रुतिपुटे को वापराधोऽम्बुदे॥ ॥८३॥

शुष्कोदर्ककुतर्ककर्कशगिरा चोद्यानि ये कुर्वते
साहित्येऽनुभवैकगोचररसे स्युस्तेऽपि चेत्पण्डिताः।
को मन्तुर्महिलां निहत्य कुचयोरत्नाणि संप्राश्नतां
वृक्षाणां कुसुमानि मर्दितवतां शाखामृगाणामपि॥ ॥८४॥

वित्ते तत्पुरुषे तु तत्पुरुषति त्वन्नाम्नि शैवाग्रणी-
रल्पः कोऽपि समाश्रयन्निह बहुव्रीहिं बाहुव्रीहिभाक्।
श्रीरामेश्वरकर्मधारयमुनीकुर्वन्कविर्भास्करः
कस्मादण्वपि कर्म धारयति न द्वन्द्वेऽपि निर्द्वन्द्वति॥ ॥८५॥

कावेरि त्वं सरस्वत्यनवरतसमाविष्टचित्ता तथाहं
न क्रोधस्ते ममापि त्वमहमपि कवेरात्मजत्वं प्रपन्नौ।
भूमिं न्यञ्चत्कबन्धा त्वमहमपि यदा जीवनं पातुमीहे
त्वं मे पातुं तदिच्छस्यनितरगुणयोरावयोः को विशेषः॥ ॥८६॥

'गया प्रयाग' द्वितयं वैपरीत्येऽपि तादृशम्।
'काशिका' पि तथैवातस्त्रिस्थली स्तूयते बुधैः॥ ॥८७॥

त्वद्भालेऽग्निशिखालेपात्तद्भालेऽग्निशिखा भवेत्।
गङ्गे शिवोऽपि न त्वत्तः कृतप्रतिकृते कृती ॥ ॥ ८८ ॥

तवाङ्घ्रौ यः प्रणिपतेत्तस्याङ्घ्रौ निपतस्यहो।
गङ्गे शिवोऽपि न त्वत्तः कृतप्रतिकृते कृती ॥ ॥ ८९ ॥ इति।

जायात्मजाभ्यां च विधीश्वराभ्यां विष्णोः समाहारयुगं निबद्धम्।
अस्तीह ते विन्दति शाब्दिकस्तदिति प्रतिज्ञा कविभास्करस्य ॥ ९० ॥

नस्याच्चेदिति वाक्यस्य कोऽर्थः कस्मिन्पिकभ्रमः।
आन्ध्रीगीर्वाणभाषाभ्यामेकमेवोत्तरं वद ॥ ॥ ९१ ॥ काकपोते।

कमले कमलोत्पत्तिः श्रूयते न च दृश्यते।
दृष्टं शम्भोः पदाम्भोजे विष्णुलोचनपङ्कजम्॥ ॥ ९२ ॥

मर्त्यं मर्त्यां गिरिं शुल्बं शब्दशास्त्रं च वर्णय।
कविभास्कर एवात्र ब्रूते धातुगुणास्पदम्॥ ॥ ९३ ॥

वीर श्रीकामरूपक्षितिरणम यशोनाशिना नायकेन
त्रैलोक्ये श्वेतिमानं कलयति यमुनाप्यत्यजन्नैजरूपम्।
संदिग्धस्तीर्थराजोऽप्यभवदथ पुनः सा नदी त्वत्प्रतापा-
दामूलाग्रं यथावत्समजनि यवनीसंघदृङ्नीरपूरैः ॥ ॥ ९४ ॥

प्रस्तौमि प्रतिहार्येव जनैरुद्गीयतेऽखिलैः।
निधनोपद्रवैर्हीनं साम तेऽन्यादृशं नृप ॥ ॥ ९५ ॥

रुद्रभूप भद्रमस्तु यद्रिपूनुपद्रवैरिह द्रुतं प्रविद्रवय्य काद्रवेयपूर्दरीम्।
तद्रमाविनिद्रणेन मुद्रिता दरिद्रता दरिद्रतान्तदद्रिभिद्वनद्रुमान्नचाद्रिये ॥ ९६ ॥

श्रीभास्करेणैव भुवि स्थितानि छत्राणि सर्वाण्यधरीकृतानि।
छायां त्वदीयामभिवाञ्छतिस्म श्रीभास्करश्छत्रपतिस्ततस्त्वम्॥ ॥ ९७ ॥

भोः पद्मपत्र भवतां यदपां कणोऽपि
न स्पृश्यते समुचितैव परस्वभीः सा।

एवं धिया त्वयि धृते निहते सति
त्वमाषाढभूतिनिपतद्गिलसीति युक्तम् ॥ ॥ ९८ ॥

कूपाकूपारकुल्यास्वथ च नदनदीस्नेयकासारवापी-
ष्वापातालं प्रविष्टैर्दशशतगुणितैरंशुभिर्वारि भूरि।
ग्राहं ग्राहं निषिञ्चन्नवसि दिनपते विश्वमेतत्समस्तं
तत्ते किं वर्णयामो निरुपधिकरुणां दासशौण्ड्यं च भूयः ॥ ॥ ९९ ॥

भूषावानखिलैर्गुणैः स्वकृतिभिः सन्तानवान्भूयसा
विद्याभिर्धनवान्सुधाधवलया कीर्त्या चिरं देहवान्।
पित्रा दैवतवानभूत्सुकृतवाँल्लोकोपकारेण यः
साधर्म्यं लभतामनेन भुवि कः **श्रीभारतीयज्वना** ॥ ॥ १०० ॥

**श्रीमद्भास्करराय** नैकजनिषु त्वद्दानतोयैर्भृता-
दासर्गं जलधेरवाप्तजनुषः स्वः शाखिनो गोश्च सा।
औदार्यं भजते हि कारणगुणाः कार्येषु न स्युः किमि-
त्येनं पूर्णमनोरथा प्रतिदिशं सर्वेऽर्थिनोऽप्यस्तुवन् ॥ ॥ १०१ ॥

नाद्रुह्यत्कस्मा अपि नास्मार्षीच्चेतसापि परदारान्।
नास्पृहयत्परराये **भास्कररायो** मखी धन्यः ॥ ॥ १०२ ॥

अदीधरच्चेतसि चन्द्रचूडमबीभरद्बन्धुजनं स दीनम्।
अचीकरत्किंच मखानशेषानतीतरत्संसृतिमात्मभक्तान् ॥ ॥ १०३ ॥

पद्मोल्लासैकहेतुर्निखिलकुवलयस्यापि मोदप्रदायी
लोकालोकोदरैकोदयमथ परतोऽप्यस्य देदीप्यमानः।
अह्नयेव प्रोज्जिहानं दिनमनु च निशां द्योतमानः प्रकाशं
तिग्मांशोर्नातिशेतां कथमिव सुमहान्**भारतीयः प्रकाशः** ॥ ॥ १०४ ॥

**श्रीमद्भास्कररायय**ज्वतिलकस्योच्चैर्यशः स्रोतसः
पात्रं दिग्वलयान्तरालमभवद्वैरोधसी रोदसी।
अश्मानन्ति कुलाचला जलधयः सप्तह्रदन्त्यैन्दवं
बिम्बं कम्बवतीह नूनमुडवः शम्बूकगुम्भन्ति च ॥ ॥ १०५ ॥

निर्यातीव पदाम्बुजान्मधुरिपोः सौतीव पद्मालयां
वेवेक्तीव पयोम्बुनी विहरति स्रष्टुर्मुखाब्जेष्विव।
किं च स्मेरयतीव कैरववनीं द्विष्टे करीन्द्रानिव
क्ष्मां मूर्ध्नेव बिभर्ति कीर्तिरमला **श्रीभारतीयज्वनः**॥ ॥ १०६ ॥

हीरति काञ्च्यां हारति चोलतटेऽङ्गेषु चन्दनाम्बवति।
कुन्दति कुन्तलदेशे कीर्तिर्**गम्भीररायतनयस्य**॥ ॥ १०७ ॥

कीर्त्या यस्य जगत्त्रये धवलिते सर्वे गजाः स्वर्गजाः
किंचोच्चैःश्रवसो हया नृपतयः सर्वेऽपि सीरायुधाः।
नद्यः स्वः सरितोऽखिलाः फणभृतो दर्वीकराधीश्वराः
शैला हन्त हिमालया ववृतिरे सर्वे सुराः शङ्कराः॥ ॥ १०८ ॥

कुमुदं वर्धयन्पद्मोल्लासी कोऽप्येष **भास्करः**।
दुन्दुभिं ध्वनयन्नुर्व्यां प्रमोदी दिनमानशे॥ ॥ १०९ ॥

वयसि चरमे लब्ध्वा सह्याद्रिजातटगेहितां
विदितनिखिलत्रय्यन्तार्थं चिदैक्यविभावनात्।
महिममहति क्षेत्रे मध्यार्जुने शिवतां गतो-
ऽप्यमलवपुषा कीर्त्या जागर्ति शाश्वतिकेन सः॥ ॥ ११० ॥

अन्येन्द्रं जगदस्थितेन्द्रमपि वा कर्तुं प्रगल्भेऽन्वये
सम्भूतो ननु बालकृष्णसचिवोत्तंसस्य रूपान्तरम्।
लक्ष्म्यम्बाहृदयाम्बुधेर्हिमरुचिः प्राज्ञैः प्रशस्यामिमां
प्राणैषीत्सुमतीर्यथामति जगन्नाथाभिधानः कृतिम्॥ ॥ १११ ॥

अब्दे प्रमोदसचिवे शब्दार्थपरिष्कृता कृता कृतिना।
**भास्करविलास**संज्ञा भायाद्भुवने कृतिश्चिरायैषा॥ ॥ ११२ ॥

अनेन वागध्वरेण समाराद्धा कथंचन।
दयतां देशिकात्मा मे देवी श्रीललिताम्बिका॥ ॥ ११३ ॥

इति श्रीविश्वामित्रमहर्षिगोत्रपयोधिकैरवमित्रस्य
श्रीमद्भास्कररायभारतीदीक्षिताग्निचिदन्तेवासितासनाथस्य जगन्नाथस्य कृतिर्भास्करविलासकाव्यमिदं
भुवनाभोगाख्यं सम्पूर्णम्॥

# ललितासहस्रनामभाष्योदाहृतग्रन्थाः ग्रन्थप्रणेतारश्च

अग्निपुराणम्
अग्निपुराणीयकोशः
अत्रिस्मृतिः
अथर्वब्राह्मणम्
अनेकार्थध्वनिमञ्जरी
अन्तर्यामिब्राह्मणम्
अमरशेषः
अमरसिंहः
अरुणोपनिषत्
अर्थरत्नावली
अष्टावक्रगीता
आगमः
आग्नेयपुराणम्
आज्ञावतारः
आथर्वत्रैपुरम्
आदित्यपुराणम्
आनन्दलहरी
आपस्तम्बः
आयुष्यसूक्तम्
आरुणोपनिषद्भाष्यम्
ईशावास्योपनिषत्
ईश्वरप्रत्यभिज्ञा
उत्तरचतुःशतीशास्त्रम्
ऐतरेयम्
कल्पसूत्रम्
कल्याणाचार्यः
कश्यपः
काठकोपनिषत्
काण्वः
कात्यायनः
कादिमतम्
कादिविद्या
कामकलाविलासः
कामन्दकः
कामशास्त्रम्
कामिकतन्त्रम्
कामिकागमः
कारिकाः
कालिकापुराणम्
कालिकोपपुराणम्
कालिदासः
कालीतन्त्रम्
काशीखण्डम्
किरातार्जुनीयम्
कुलागमः
कुलार्णवः
कूर्मपुराणम्
कृष्णदासः
क्रोधभट्टारकः
क्षेमराजः
क्षेमराजवृत्तिः
खण्डनखण्डखाद्यम्
गरुडपुराणम्
गायत्रीकल्पः
गुह्योपनिषत्
गोपथब्राह्मणम्

पिङ्गलनागः
पिङ्गलसूत्रम्
पुलस्त्यस्मृतिः
पुष्पदन्तः
पूर्वचतुःशतीशास्त्रम्
पैङ्गलतन्त्रम्
प्रत्यभिज्ञा
प्रपञ्चसारः
प्रणवार्थदीपिका
फेत्कारिणीतन्त्रम्
बहुरूपाष्टकतन्त्रम्
बहुरूपाष्टकप्रस्तारः
बह्वृचब्राह्मणम्
बह्वृचोपनिषत्
बृहज्जाबालम्
बृहत्तन्त्रकौमुदी
बृहत्पाराशरस्मृतिः
बृहत्साम
बृहदारण्यकम्
बृहन्नारदीयम्
बृहस्पतिस्मृतिः
बोधसारम्
बौधायनः
ब्रह्मगीता
ब्रह्मपुराणम्
ब्रह्मवैवर्तम्
ब्रह्मसूत्रम्
ब्रह्माण्डपुराणम्
ब्रह्मानन्दखण्डम्
भक्तितन्त्रम्
भक्तिमीमांसासूत्रम्
भक्तिसूत्रम्
भगवतीपुराणम्
भगवत्पादाचार्यः
भगवद्गीता
भट्टोत्पलः
भरद्वाजस्मृतिः
भविष्योत्तरपुराणम्
भामती
भारतम्
भावनोपनिषत्
भाष्यम्
भैरवभट्टारकः
भैरवयामलम्
भोजराजवृत्तिः
भोजराजीयम्
मङ्गलराजस्तवः
माण्डूक्यश्रुतिः
मत्स्यपुराणम्
मनुस्मृतिः
मल्लारिमाहात्म्यम्
महाभारतम्
महाभाष्यम्
महामञ्जरी
महास्वच्छन्दतन्त्रम्
महास्वच्छन्दसङ्ग्रहः
महिम्नस्तोत्रम्
मातृकाविवेकः
माधवः
मार्कण्डेयपुराणम्
मीमांसकवादकौतूहलम्
मुण्डकोपनिषत्
मृगेन्द्रसंहिता
मैरालतन्त्रम्
यज्ञवैभवखण्डम्
याज्ञवल्क्यस्मृतिः
यादवकोशः
यास्कः

शाबरचिन्तामणिः
शाबरभाष्यम्
शाम्भवानन्दकल्पलता
शारदातिलकम्
शारीरकभाष्यम्
शार्ङ्गधरीयकथाकोशः
शाश्वतकोशः
शिवधर्मोत्तरम्
शिवपुराणम्
शिवरहस्यम्
शिवसूत्राणि
शिवसूत्रविमर्शिनी
शिवस्तवः
शिवानन्दलहरी
शिवाष्टोत्तरशतव्याख्यानम्
शुकसंहिता
शुक्रसंहिता
शैवतन्त्रम्
शैवशास्त्रम्
शैवसूत्रवार्तिकम्
शैवाः
शैवागमः
श्यामलारहस्यम्
श्यामलासहस्रनाम
श्रीकण्ठभाष्यम्
श्रीमद्भागवतम्
सङ्केतपद्धतिः
संक्षेपशारीरकम्
संवर्तस्मृतिः
सनत्कुमारतन्त्रम्
समयाचारस्मृतिः
समाससूत्रम्
सहस्रभोजनखण्डम्
सांख्यतत्त्वकौमुदी
सांख्याः
सुन्दरीतापिनीयम्
सुन्दरीमहोदयः
सुप्रभेदः
सुभगार्चापद्धतिः
सुभगोदयटीका
सूतसंहिता
सूतः
सेतुबन्धः
सौन्दर्यलहरी
सौभाग्यरत्नाकरः
सौरपुराणम्
सौरसंहिता
स्कन्दपुराणम्
स्पन्दशास्त्रम्
स्मृतिकाराः
स्वच्छन्दतन्त्रम्
स्वच्छन्दभैरवः
स्वच्छन्दसंग्रहः
स्वतन्त्रतन्त्रम्
हनुगुण्ठपीठमाहात्म्यम्
हरदत्तः
हरिवंशः
हलायुधः
हर्षदीक्षितः
हारीतस्मृतिः
हिरण्यकेशिसूत्रम्
हैमकोशः

# विषयानुक्रमणिका

श्रीः ।

# ललितासहस्रनाम ।

भास्कररायप्रणीतसौभाग्यभास्करभाष्योपेतम् ।

## उपोद्घाताख्या प्रथमा कला ।

**श्रीललिताम्बायै नमः ।**

श्रीगम्भीरविपश्चितः पितुरभूद्यः कोनमाम्बोदरे
विद्याष्टादशकस्य मर्मभिदभूद्यः श्रीनृसिंहाद्गुरोः ।
यश्च श्रीशिवदत्तशुक्लचरणैः पूर्णाभिषिक्तोऽभव-
त्स त्रेता त्रिपुरा त्रयीति मनुते तामेव नाथत्रयीम् ॥ १ ॥

गुरुचरणसनाथो भासुरानन्दनाथो विवृतिमतिरहस्यां वीरवृन्दैर्नमस्याम् ।
रचयति ललिताया नामसाहस्रिकाया गुरुकृतपरिभाषाः संविवृण्वन्नशेषाः ॥ २ ॥

अष्टाभिर्वाङ्मयानामधिपतिभिरमोघोक्तिभिर्देवताभि-
र्मात्राज्ञप्ताभिरग्र्यं यदरचि ललितादिव्यनाम्नां सहस्रम् ।
यद्ब्रह्माणीरमेशप्रभृतिदिविषदां विस्मयाधानदक्षं
तत्रैकस्यापि नाम्नः कथमिव विवृतिं मादृशः कर्तुमीष्टे ॥ ३ ॥

तथापि श्रीमात्रा दहरकुहरे सूत्रधरया
समादिष्टा वाचामधिपतिषु काप्यन्यतमिका ।
मदीड्यश्रीनाथत्रयचरणनिर्णेजनजलैः
पवित्रे जिह्वाग्रे नटति ममता सा मम मता ॥ ४ ॥

आ प्राचः कामरूपाद्द्रुहिणसुतनदप्लाविताद्वा प्रतीचो
गान्धारात्सिन्धुसार्द्राद्रघुवररचितादा च सेतोरवाचः ।
आ केदारादुदीचस्तुहिनगहनतः सन्ति विद्वत्समाजा
ये ये तानेष यत्नः सुखयतु समजान्कश्चमत्कर्तुमीष्टे ॥ ५ ॥

इह खलु निखिलपुरुषार्थसाधने भगवत्याराधनेऽभ्यर्हिततमस्य रहस्यनामसहस्र-
कीर्तनस्य रहस्यतरसद्गुरुसंप्रदायैकवेद्यस्वरूपत्वेन तान्संप्रदायान् शिष्यानुजिघृक्षया

**त्रिपुरां कुलनिधिमीडेऽरुणश्रियं कामराजविद्धाङ्गीम् ।**
**त्रिगुणैर्देवैर्निनुतामेकान्तां बिन्दुगां महारम्भाम् ।। १ ।।**

दिदर्शयिषवः श्रीमन्नृसिंहानन्दनाथनामानोऽस्मद्गुरुचरणाः निरन्तरनिरन्तराया अपि शिष्यशिक्षार्थं मङ्गलमाचरन्ति—**त्रिपुरेति** । त्र्यात्मकं पुरं भूपुरं मण्डलकोणरेखामन्त्रादिसमूहो वा यस्याः सा त्रिपुरा । तदुक्तं **कालिकापुराणे**-

**त्रिकोणं मण्डलं चास्या भूपुरं च त्रिरेखकम् ।**
**मन्त्रोऽपि त्र्यक्षरः प्रोक्तस्तथा रूपत्रयं पुनः ।।**
**त्रिविधा कुण्डलीशक्तिस्त्रिदेवानां च सृष्टये ।**
**मर्वं [redacted] त्रयं यस्मात्तस्मात्तु त्रिपुरा मता ।।**

इति । कुलस्य सजातीयसमूहस्य निधिं मातृमानमेयरूपत्रिपुट्या एकज्ञानविषयत्वेन साजात्यात् । घटमहं जानामीत्येव ज्ञानाकारात् ।

'जानामीति तमेव भान्तमनुभात्येतत्समस्तं जग'दिति

श्रीमदाचार्यभगवत्पादोक्तेः । तदेव हि कुलम् । 'सजातीयैः कुलं यूथ' मिति कोशात् । परमशिवादिस्वगुरुपर्यन्तो वंशो वा कुलम् । 'संख्या वंश्येने' ति **पाणिनिसूत्रे** 'वंशो द्विधा विद्यया जन्मना चे' ति **महाभाष्यात्** । आचारो वा कुलम् ।

'न कुलं कुलमित्याहुराचारः कुलमुच्यते ।
आचाररहितो राजन्नेह नामुत्र नन्दति' ।।

इति **भविष्योत्तरपुराणात्** । सुषुम्नामार्गो वा कुलम् । कुः पृथिवीतत्त्वं लीयते यस्मिंस्तदाधारचक्रं तस्य शक्यस्य सबन्धात् । अरुणा रक्ता श्रीः कान्तिर्यस्यास्ताम् । कामराजेन कामेश्वराख्यपरमशिवेन विद्धं सामरस्यापन्नं अङ्गं यस्याः । **त्रिगुणैः** सत्वरजस्तमोमयैर्देवैर्विष्णुब्रह्मरुद्रैः नितरां नुतां स्तुताम् । एकान्तां रहोदेवतां, एकां मुख्यां तां प्रसिद्धां वा । अश्चासाविश्चेति कर्मधारये शिवकाम इत्यर्थात्तत्सुन्दरीं वा । 'अकारो ब्रह्मविष्ण्वीशकमठेष्वि' ति विश्वः । 'इकारो मन्मथः प्रोक्त' इत्यनेकार्थध्वनिमञ्जरी च । बिन्दुं सर्वानन्दमयं चक्रं गच्छतीति तथा । महान्ब्रह्माण्डादिरूप आरम्भो यस्यास्तामीडे स्तौमीत्यर्थः । **अथात्रैव नामोद्धारः प्रदर्श्यते**—त्रिपुरेत्यत्र पकार एकसंख्याया वाचको रेफस्तु द्वित्वसंख्यायाः । यदाह **वररुचिः** ।

'कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्काः ।
नञे शून्यं ज्ञेयं तथा स्वरे केवले कथिता' ।।

इति । पिण्डान्त्यैरित्यस्य व्यञ्जनसमूहे चरम एव सांकेतिक इत्यर्थः । अङ्कानां वामतो गतिरिति न्यायात्पुरेत्यनेनैकविंशतिसंख्या कथिता भवति । एवमुत्तरत्रापि । तेन **त्रि** इत्याकारकपदारब्धानि नामानि त्रिनयनेत्यारभ्य त्रिकोणगेत्यन्तान्येकवि-

शतिरेवेत्यर्थः । निधयो नव 'नवग्रहद्वारनिधिप्रजेशा' इति छान्दसीयवचनात् । कुलपदारब्धानि नामानि नव 'कुलामृतैकरसिके'त्यारभ्य कुलरूपिणीत्यन्तानि । अरुणाः सूर्या द्वादश श्रीपदारब्धानि श्रीमातेत्यारभ्य श्रीशिवेत्यन्तानि । कामपदारब्धानि राजसंख्याकानि षोडश कामेशबद्धमाङ्गल्येत्यारभ्य कामकेलितरङ्गितेत्यन्तानि । विद्वाङ्गी वि इत्यक्षरारब्धान्येकोनचत्वारिंशत् विशुक्रप्राणहरणेत्यारभ्य विरागिणीत्यन्तानि । त्रिगुणैर्गुणनिधिर्गुणप्रिया गुणातीतेति त्रीणि । निनुता निकारारब्धानि षष्टिः निजारुणेत्यारभ्य निरालम्बान्तानि । एकान्ता ताम्बूलपूरितमुखीत्येकं नाम । बिन्दुगा बिन्दुमण्डलवासिनी बैन्दवासना बिन्दुतर्पण

**ललितानामसहस्रे छलार्णसूत्रान्यथाग्निभ्यः ।**
**परिभाषा भाष्यन्ते संक्षेपात्कौलिकप्रमोदाय ॥ २ ॥**

**पञ्चाशदेक आदौ नामसु सार्धद्व्यशीतिशतम् ।**
**षडशीतिः सार्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥ ३ ॥**

**दशभूः सार्धनृपाला अध्युष्टं सार्धनवषडध्युष्टम् ।**
**मनिसूतहयाम्बाश्वाम्बाश्वोक्तिर्ध्यानमेकेन ॥ ४ ॥**

अगस्त्य उवाच ।

**अश्वानन महाबुद्धे सर्वशास्त्रविशारद ।**
**कथितं ललितादेव्याश्चरितं परमाद्भुतम् ॥ १ ॥**

संतुष्टेति त्रीणि । महारम्भा महापदारब्धानि द्विचत्वारिंशत् महालावण्येत्यारभ्य महेश्यन्तानि ॥ १ ॥ छलाक्षरनामसूत्रेभ्यो नामविभागादेर्विलम्बेन क्लिष्टतया ज्ञायमानत्वात्तत्त्या एव परिभाषाः सुलभोपायेन सुबोधा इति विद्योपासकानां तोषाय कथ्यन्त इत्यर्थः । छलाक्षरसूत्राणां विलम्बितार्थबोधजनकत्वं तत्र तत्र प्रकटीकरिष्यामः ॥ २ ॥ आदौ प्रथमभागे पञ्चाशदेकश्च । एकपञ्चाशच्छ्लोका इत्यर्थः । वक्ष्यमाणस्य सहस्रभोजनप्रयोगस्य बहुदिनक्रियमाणत्वपक्षे प्रथमदिने एकपञ्चाशच्छ्लोकपाठः । ध्यानश्लोकस्तु प्रत्यहं पठनीय इति वैषम्यध्वननाय विभज्य कथनम् । नामसु विषये द्व्यशीत्युत्तरं शतमर्धश्लोकश्च अन्ते फलश्रुत्यादिप्रकरणं । संहृत्य तु त्रीणि शतानि विंशतिश्च श्लोका इत्यर्थः ॥ ३ ॥ अथ प्रथमभागं विभज्य दर्शयति—भूः एकः । नृपालाः षोडश । अध्युष्टं सार्धत्रयम् । मुनिरगस्त्यः । हयाश्वपदानि हयग्रीवपराणि । दशश्लोका अगस्त्योक्तिरूपा इत्यादिरीत्या यथाक्रममन्वय । अगस्त्याख्यो हि महामुनिः श्रीविद्योपासकाग्रेसरस्तत्रभगवतो हयग्रीवस्य देशिकेन्द्रस्य मुखाद्ब्रह्माण्डपुराणीयैर्मन्त्रन्यासपूजापुरश्चरणहोमरहस्यस्तोत्राख्यैः सप्तभिः खण्डैः श्रीमातुः प्रादुर्भावादिरहस्यजातमाकर्ण्य इतोऽपि परमरहस्यं नामसहस्रमस्तीति तपोबलादेव निश्चित्य तद्भक्तायापि मह्यं किमिति गुरुभिर्न दत्तमित्यनुपदेशनिमित्तांशे सदिहानः पृच्छतीत्याह भगवान् सूतः ॥ ४ ॥ न गच्छतीत्यगः पर्वतस्तं विन्ध्य-

नामानं स्त्यायतीत्यगस्त्यः । स्त्यानं स्तम्भनम् । सा च कथा काशीखण्डे द्रष्टव्या । असंगतत्वापनोदाय पूर्वकथाप्रसङ्गं सामान्येन स्मारयति—अश्वेति । देवीभागवते प्रथमस्कन्धे तावदियं कथा स्मर्यते । पुरा किल भगवान् विष्णुर्यज्ञसंरक्षणादिघनतर-कार्यार्थं कृतबहुजागरः श्रान्तः शार्ङ्गधनुषः कोटिं ग्रीवयावलम्ब्य निद्राणोऽभूत् । तदा ब्रह्मरुद्रादयः कार्यविशेषसिषाधयिषया तज्जागरणाय वम्रिनामककृमिभ्यो यज्ञ-भागमिच्छद्भ्यो दत्त्वा तन्मुखात्प्रत्यञ्चामत्रोटयन् । तेन कोटेरुच्चलनाच्छिरोऽप्यु-ड्डीनं क्वापि गतमभूत् । ततः शोकाविष्टाः सुरास्तच्छीर्षमलभमानास्त्रिपुरसुन्दरीं तुष्टुवुः । सा तुष्टा सती हयशिरायोजनेनैनं जीवयतेत्याज्ञाप्य भगवत्यन्तरधत्त । तत-

> **पूर्वं प्रादुर्भवो मातुस्ततः पट्टाभिषेचनम् ।**
> **भण्डासुरवधश्चैव विस्तरेण त्वयोदितः ।। २ ।।**
> **वर्णितं श्रीपुरं चापि महाविभवविस्तरम् ।**
> **श्रीमत्पञ्चदशाक्षर्या महिमा वर्णितस्तथा ।। ३ ।।**

स्तथा जीवितो विष्णुर्हयग्रीवो भूत्वा हयग्रीवाख्यं दैत्यं हतवान् । रहस्यजातमखिलं देवीमुखादेव लब्धवानित्यादि । सोऽयमश्वाननो विष्णुरेव । तदिदं विशेष्यमुक्त-वृत्तान्तस्मारणेन देव्यनुगृहीतत्वाभिप्रायगर्भम् । अत एव महाबुद्धे इत्यादिविशेषणद्वयं न स्तुतिमात्रम्। ललितेति । पद्मपुराणे हि 'लोकानतीत्य ललते ललिता तेन चोच्यते' इति निर्वचनश्लोके चकारादन्यदपि संभवन्निर्वचनमनुमतम् । पराशक्तिसदाशिवा-दिरूपाणि शक्तिशिवयोरुत्तरोत्तरापकर्षवन्ति बहूनि सन्ति । तेषां च लोका अपि बहुविधाः । परशिवाभिन्नमहाशक्तिस्तु सर्वलोकातीता महाकैलासापराजितादिपद-वाच्ये सर्वलोकोत्तमे लोके तिष्ठति । तस्याश्च शरीरं घनीभूतघृतवद्रजस्तमःसंपर्क-शून्यशुद्धसत्त्वघनीभावरूपम् । अन्यासां शिवशक्तीनां कतिपयानां सात्त्विकशरीरा-ण्यपि सत्त्वाधिक्यगुणान्तराल्पत्वयुक्तानि न पुनः शुद्धसत्त्वानि । अतः सर्वोत्तमैवैषा परब्रह्ममूर्तिः । अस्या अपि सन्ति रहस्यभूता बहवो भेदास्तेषु कामेश्वर्यात्मक-मूर्तिरेवेह ग्रन्थे प्रतिपाद्येति ललितापदेन सूचितम् । ललितं शृङ्गारहावजन्यः क्रियाविशेषः तद्वती ललिता। तेन शृङ्गाररसप्रधानेयं मूर्तिरिति सूचितम् । सैव देवी क्रीडाविजिगीषादिशीलत्वात् । तस्याश्चरितं प्रादुर्भावादिस्तोत्रसमुदायान्तं कथितं भवतेति शेषः । परमाद्भुतं अत्युत्तमत्वात्पूर्वमश्रुतचरत्वादनुपमत्वाच्चेत्यर्थः ।।१।। अथैतदेव विशिनष्टि सप्तभिः पूर्वमित्यादिभिः । प्रादुर्भावः । 'असद्वा इदमग्र आ-सीत्,' 'सदेव सोम्येदमग्र आसीत्', 'नाऽसदासीन्नो सदासीदि'त्यादिश्रुत्येकवाक्य-तया निर्णीतस्य सृष्टिप्राक्कालिकस्य निर्विशेषचिन्मात्रस्य प्राथमिकः कामकलारूपप-रिणामो गुरुमुखैकवेद्यः । स च पूर्वं इतः प्राक्, पट्टाभिषेकादिभ्यः प्रथमं वा । त्वयोदित इति सर्वत्रान्वेति । अग्निकुण्डात्समुद्भूतरूपो वाऽवतारविशेषात्मा प्रादुर्भावः। पट्टं सकलभुवनसाम्राज्याधिकारस्तस्य विषयेऽभिषेचनं स्वायत्तीकरणेतिकर्तव्यतारू-

पोऽङ्गविशेषः । उदितमिति तु नपुंसकत्वेन परिणमनीयम् । भण्डाख्योऽसुरो ललितोपाख्याने यो विस्तरेण वर्णितस्तस्य वधो युद्धे हननं विस्तरेण बहुना शब्दराशिना । 'प्रथने वावशब्दे' इति पर्युदासाच्छब्दभिन्न एव विस्तार इति रूपम् ॥ २ ॥ निरुपपदस्य पुरपदस्य प्रवृत्तिनिमित्तभूतधर्माणां पौष्कल्याद्देव्याः पुरमेव मुख्यं पुरपदवाच्यं 'अभियुक्तानां नाम श्रीपदपूर्वं प्रयुञ्जीते' ति वचनाच्छ्रीकारपूर्वकमिह प्रयुक्तम् । तच्च **रुद्रयामले** 'अनन्तकोटिब्रह्माण्डकोटीनां बहिरूर्ध्वतः' इत्यादिना पञ्चविंशतिप्राकारैरनन्तयोजनविस्तृतैः परिवेष्टितत्वेन वर्णितमेकम् । मेरोरुपरि तत्समानयोगक्षेमं संक्षिप्तं ललितास्तवरत्ने भगवता दुर्वाससा देशिकेन्द्रेण वर्णितमपरम्। क्षीरसमुद्रमध्ये तृतीयमिति तु **विद्यारत्नभाष्यकाराः** । महाविभवविषयकः शब्द-

**षोढान्यासादयो न्यासा न्यासखण्डे समीरिताः ॥ ४ ॥**
**अन्तर्यागक्रमश्चैव बहिर्यागक्रमस्तथा ।**
**महायागक्रमश्चैव पूजाखण्डे प्रकीर्तितः ॥ ५ ॥**

**पुरश्चरणखण्डे तु जपलक्षणमीरितम् ।**
**होमखण्डे त्वया प्रोक्तो होमद्रव्यविधिक्रमः ॥ ६ ॥**

**चक्रराजस्य विद्यायाः श्रीदेव्या देशिकात्मनोः ।**
**रहस्यखण्डे तादात्म्यं परस्परमुदीरितम् ॥**

**स्तोत्रखण्डे बहुविधाः स्तुतयः परिकीर्तिताः ॥ ७ ॥**
**मन्त्रिणीदण्डिनीदेव्योः प्रोक्ते नामसहस्रके ।**

राशिर्यत्रेति तु वर्णनक्रियाया विशेषणम् । श्रीबीजयुक्ता या पञ्चदशाक्षरी पञ्चदशानां स्वराणां समाहारः कादिविद्या हादिविद्या वा तस्याः । तस्यां श्रीबीजयोगस्तु 'चत्वार ई बिभ्रति क्षेमयन्तः' इति श्रुतिसिद्धो रहस्यतरः साम्प्रदायिकैकवेद्योऽस्तीति कश्चित् । तत्तन्त्रेषु क्वाप्यदर्शनात्प्रामाणिका न मन्यन्ते । उक्तश्रुतिस्तु 'कामराजाख्यमन्त्रान्ते श्रीबीजेन समन्विता । षोडशाक्षरविद्येयं श्रीविद्येति प्रकीर्तिते' ति हयग्रीवोद्धृतमन्त्रान्तरपरेत्यप्याहुः । तेन श्रीशब्दः शोभादिपरः । वक्ष्यमाणव्याडिकोशेन बह्वर्थत्वावगमात् ॥ ३ ॥ **षोढेति** । गणेशग्रहनक्षत्रयोगिनीराशिपीठाख्यन्यासषट्कजन्यावान्तरापूर्वषट्कैकपरमापूर्वसाधनीभूतो न्यासः षोढान्यास उच्यते । स च भूषणमालिन्यादिभेदादनेकविधः । आदिना चक्रन्यासादिपरिग्रहः । न्यासखण्डे समस्तन्यासैकप्रतिपादके ग्रन्थशकले । न्यासो नाम तत्तद्देवतानां तत्तदवयवेष्ववस्थापनम् । अवस्थितत्वेन भावनेति यावत् । ४ ॥ **अन्तरिति** । अन्तर्यागो नामाधाराद्राजदन्तान्तं तेजस्तन्तोर्विभावनं, मानसी देवपूजा वा तस्य क्रम इतिकर्तव्यता । बहिर्यागः पात्रासादनादिशान्तिस्तवान्तः कर्मसमूहः । स एवाष्टाष्टकादिघटितो महायागः । एते चास्माभि**र्वरिवस्याप्रकाशे** पूजाप्रकरण एव निरूपिताः ॥ ५ ॥ **पुरश्चरणेति** । पुरः मन्त्रोपास्तेरादौ दीक्षोत्तर-

कालं चरणं परिचर्या । जपस्य लक्षणमवस्थापञ्चकशून्यषट्कविषुवत्सप्तकचक्रनवक-विभावनादिरूपं चिह्नम् । तच्चास्माभिर्वरिवस्यारहस्ये प्रथमांश एवोक्तम् । होमेति । होमानां तद्द्रव्याणां च तद्विधीनां द्रव्यपरिमाणादिरूपाणां च क्रमः शब्दमध्ये पाद-विक्षेपः । निबन्धनमिति यावत् ॥ ६ ॥ चक्रराजस्येति टच्प्रत्ययान्तम् । बिन्द्वादि-नवचक्रात्मकस्येति तदर्थः । विद्यायाः पञ्चदश्याः षोडश्या वा । श्रीदेव्याः त्रिपुर-सुन्दर्याः । देशिकात्मनोः गुरुशिष्ययोः तादात्म्यं तद्ब्रह्मैव आत्मा स्वरूपं यस्य तत्तदात्म 'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधिः स्मृतः' इति वचनात् । तस्य भाव इत्यर्थे ब्राह्मणादित्वात्ष्यञ् । सर्वेषामेकब्रह्मरूपता । अभेद इति यावत् । मन्त्रस्य निगमार्थवर्णनावसरे वरिवस्यारहस्येऽस्माभिरुक्तोऽस्य प्रकारः । स्तोत्रेति । बहु-विधाः पञ्चमीस्तवराजादिरूपाः ॥ ७ ॥ मन्त्रिणी मन्त्री राजाधिकारोपयोगिनी

न तु श्रीललितादेव्याः प्रोक्तं नामसहस्रकम् ॥ ८ ॥
तत्र मे संशयो जातो हयग्रीव दयानिधे ।
किंवा त्वया विस्मृतं तज्ज्ञात्वा वा समुपेक्षितम् ॥ ९ ॥
मम वा योग्यता नास्ति श्रोतुं नामसहस्रकम् ।
किमर्थं भगवता नोक्तं तत्र मे कारणं वद ॥ १० ॥

मननक्रिया सास्यास्तीत्यर्थे इनिः । नान्तत्वान्ङीप् । अमात्येत्यर्थः । सा तन्त्रेषु रा-जश्यामलेत्युच्यते । सा च तन्त्रेषु वाराहीति प्रसिद्धा, ते च ते देव्यौ च तयोः ॥ ८ ॥ तत्रेति । तत्र अनुक्तौ धर्मीभूतायाम् । ललितासहस्रनामोक्तत्वाभावविशेष्यकः संशय इत्यर्थः । स च चतुष्कोटिक इत्याह– किंवेत्यादिना सार्धेन । विस्मृति-प्रयुक्तत्वमेकः प्रकारः । सर्वज्ञस्य विस्मरणासंभवात्प्रकारान्तरमाह — ज्ञात्वा-वेति । उपेक्षा इष्टानिष्टोभयविषयकप्रवृत्तिनिवृत्त्योदासीन्येनावस्थानम् ॥ ९ ॥ मित्रशत्रुभृत्योदासीनभेदेन चतुर्विधेषु जीवेषु भृत्यकोटिप्रविष्टस्य शिष्यस्योदासी-नत्वायोगो भक्तिजिज्ञासितार्थोपेक्षायां देशिकेन्द्रस्य कृपालुत्वहानिश्चेत्यतस्तृतीयं प्रकारमाह —मम वेति । नास्तीत्यनेन सामयिकाभाव उक्तो नात्यन्ताभावः । तथात्वे चतुर्थकोटेरुत्थानायोगात् । अनधिकारिणं प्रत्यनुक्तेर्भृत्यत्वविघटकतायाः कृपालुत्वविघटकत्वस्य च योगादिति भावः । तदुक्तं बोधसारे ।

'तत्त्वद्विवेकवैराग्ययुक्तवेदान्तयुक्तिभिः ।
श्रीगुरुः प्रापयत्येव नपद्यमपि पद्यताम् ॥
प्रापय्य पद्यतामेनं प्रबोधयति तत्क्षणात् ।
तस्मात्सर्वप्रयत्नेन सेव्यः श्रीगुरुभास्करः' ॥ इत्युक्तम् ।

तत्र नपद्यमित्येकं पदम् । नकारेणायं समासः । अयोग्येपि योग्यतामापाद्य श्रीगुरु-सूर्यो बोधयतीति समुदायार्थः । अतो योग्यतायामपि गुरुर्दद्यादेवेत्याशयेन कोटि-

त्रयं स्वयमेव निरस्य का पुनश्चतुर्थी कोटिरित्यनवधार्य पृच्छति—**किमर्थमिति ।** भवत्कर्तृकोक्तत्वाभावः किंप्रयुक्त इत्यर्थः । कारणं चतुर्थी कोटिम् । इतरकोटीनां स्वेनैव निरस्तत्वादिति भावः ॥१०॥

अथैकश्लोकः सूतोक्तिरूपः । भारते 'नापृष्टः कस्यचिद् ब्रूयादिति वेदानुशासनमि' ति निषेधात्पृच्छकाय किमपि न वक्तव्यम् । 'यत्तु अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभव'मिति तदुत्तरार्धं तदपि श्रद्धालुप्रश्नासमर्थशिष्यपरम् । श्रद्धाभावे हानिस्मरणात् । यदाह **बोधायनः** ।

'अश्रद्धा परमः पाप्मा श्रद्धा हि परमं तपः ।
तस्मादश्रद्धया दत्तं हविर्नाश्नन्ति देवताः ॥

इष्ट्वा दत्त्वापि वा मूर्खः स्वर्गं न हि स गच्छति ।
शङ्काविहितचारित्रो यः स्वाभिप्रायमाश्रितः ॥

शास्त्रातिगः स्मृतो मूर्खो धर्मतन्त्रोपरोधनादि ' ति ।
श्रुतिरपि 'श्रद्धयाग्निः समिध्यते श्रद्धयाहूयते हवि' ॥

रित्यादि । ततश्च श्रद्धाभावे पृच्छकायापि न वक्तव्यं किमुतापृच्छकाय । तत्सत्त्वे तु यदि शिष्यः प्रश्ने न समर्थः तदा प्रश्नमप्रतीक्ष्यैव गुरुर्वदेदिति स्थितिः । प्रकृते त्वगस्त्यः श्रद्धालुः प्रश्ने समर्थश्च अथापि किमिति न पृच्छतीति चिन्तयानो नापृष्ट इति निषेधाद्भीतो देशिकसार्वभौमो भगवान् हयग्रीवः शिष्यकृतशुश्रूषया

सूत उवाच ।

**इति पृष्टो हयग्रीवो मुनिना कुम्भजन्मना ।**
**प्रहृष्टो वचनं प्राह तापसं कुम्भसंभवम् ॥ ११ ॥**
**लोपामुद्रापतेऽगस्त्य सावधानमनाः शृणु ।**
**नाम्नां सहस्र यन्नोक्तं कारणं तद्वदामि ते ॥ १२ ॥**

वशीकृतो विवक्षुरपि भक्तिपूर्वकप्रश्नाभावकृतविलम्बादियन्तं कालं दुःखित इवाभूत् । अधुना तु न तथेत्याह सूतः—**इति पृष्ठ इति ।** चतुर्थकोटिविषयकप्रश्नकर्मीभूत इत्यर्थः । प्रच्छधातोर्द्विकर्मकतया कोटिवद्गुरोरपि कर्मत्वात् । प्रहृष्टः विलम्बापदमादिति शेषः । तपोभिर्यज्ञादिभिः पापक्षये सत्यङ्कुरितविविदिषाकत्वादस्ति श्रद्धेति योग्यतां प्रदर्शयति—**तापसमिति ।** चित्तवृत्तिनिरोधकारणीभूतवायुवृत्तिनिरोधशीलत्वादपि योग्यतामाह—**कुम्भसंभवमिति ।** कुम्भस्य कुम्भकस्य सम्यक् चिरकालं भवः स्थितिर्यस्मिस्तमित्यर्थः । रेचकपूरकयोः सार्वजनीनतया सुलभत्वान्निरोधपदवाच्यत्वाभावाच्च तत्परित्यागेन कुम्भकस्यैव ग्रहणम् ॥ ११ ॥

अथ सार्धैः षोडशभिः श्लोकैर्हयग्रीवोक्तिः । पूर्वश्लोक एव हयग्रीवः प्राहेत्युक्तत्वान्नैतदारम्भे हयग्रीव उवाचेत्युक्तिः । एवमम्बावचनेऽप्युत्तरत्र ज्ञेयम् । अत्र-

भिमतदेव्याराधनं गृहिण्या क्रियमाणमप्यनुकूलदाम्पत्यघटकं सत्पत्न्या उपास्तियोग्यतापादकमिति व्यञ्जयन् विवक्षितमर्थं प्रतिजानीते—**लोपामुद्रापत इति**। अत एव भगवत्यैव त्रिशत्यां वक्ष्यते

'पत्न्यस्य लोपामुद्राख्या मामुपास्तेऽतिभक्तितः।
अयं च नितरां भक्तस्तस्मादस्य वदस्व त' दिति ॥

अत्र भर्तृनिष्ठभक्तेः पत्न्यानुकूल्यस्य समुच्चयार्थकश्चकार इति तत्रैव वक्ष्यामः। अथवा न केवलं भक्तिप्रश्नावेव योग्यतावच्छेदकौ। विद्योपास्तिविरहे तयोः सत्वेऽप्युपदेष्टुर्योगिनीशापाम्नानात्। अतस्तत्साहित्यद्योतनायेदं विशेषणम्। अथवा लोपामुद्राशब्दस्तद्विद्यापरस्त्रिपुरसुन्दरीपरो वा। सैव पतिरुपास्या यस्येत्यर्थः। न चागस्त्यविद्योपासकस्य कथं तथात्वव्यपदेशः। शाखान्तराधिकरणन्यायेन विद्ययोरभेदाभिप्रायेणोपपत्तेः। न च विद्यापदवाच्ययोरुपास्त्योरभेदेऽप्यगस्त्यलोपामुद्रासंज्ञयोर्मन्त्रयोर्भेद एवेति वाच्यम्। अगस्त्येनोपासितेत्यादियौगिकशब्दैकदेशानां तेषां संज्ञात्वाभावेन भेदकत्वायोगात्। न चाक्षरन्यूनाधिकभावाभ्यां सुषिसुषिरयोरिव भेदः। तयोः पदभेदकत्वेऽपि मन्त्रभेदकत्वाभावात्। अत एव 'अप्स्वन्तरमृत' मिति मन्त्रस्य याजुषाथर्वणबह्वृचैर्भिन्नच्छन्दस्कत्वेन पाठेऽपि भेदानङ्गीकारस्तान्त्रिकाणां संगच्छते। अत एव च भूतशुद्ध्यन्तर्गतजलमण्डलशोधने विकल्पेन विनियोगो न्यायसिद्धः। तदुक्तम्।

'अप्स्वन्तरिति मन्त्रेण शोधयेदम्बुमण्डलम्।
आप्योष्णिहा पुरस्ताच्च बृहत्या पुरउष्णिहे' ति।

एवं 'युञ्जन्ति हरी इषिरस्ये' ति मन्त्रो बह्वृचच्छन्दोगाभ्यां छन्दोभेदेन पठ्यमानोऽपि न भिद्यते। अनेनैवाशयेन नार्मेधाख्यसामाधिकारे 'अथ पुर उष्णिगनुष्टुप्तेनानुष्टुभो नयन्ती' ति श्रुतौ द्वयोरपि छन्दसोरुल्लेखः। तेन तन्त्रराजे

**रहस्यमिति मत्वाहं नोक्तवांस्ते न चान्यथा।**
**पुनश्च पृच्छसे भक्त्या तस्मात्तत्ते वदाम्यहम् ॥ १३ ॥**

**ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः।**
**भवता न प्रदेयं स्यादभक्ताय कदाचन ॥ १४ ॥**

**न शठाय न दुष्टाय नाविश्वासाय कर्हिचित्।**
**श्रीमातृभक्तियुक्ताय श्रीविद्याराजवेदिने ॥ १५ ॥**

हादिविद्याधिकारे पठितानां कालनित्यामन्त्राणां पारायणानां च कादिविद्याङ्गत्वेनापि लेखः पद्धतिकाराणां संगच्छत इति दिक्। अवधानं विषयान्तरसंचाराभावस्तत्सहितं मनो यस्य तादृशः सन्। इतरकोटीनां तेष्वरसानां च तवैव स्फुरितत्वेऽपि तद्विलक्षणायाः कोटेर्विवक्षिताया झटिति त्वद्बुद्धौ स्फुरणायोग्यत्वादिति भावः। यत् येन कारणेन 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शन'मिति वार्तिके सर्वविभक्तीनां

साधुत्वाभिधानात् ।। १२ ।। प्रकटार्थस्योक्तौ प्रश्नभक्तिसदसद्भावापेक्षा नावश्यकी, किंतु रहस्यविषय एवोक्तत्वा वस्तुस्थितिरित्युपसंहार द्योतयन् भक्तिपूर्वकप्रश्नस्यापदेशस्य चान्वयव्यतिरेकावुपदिशति— रहस्यमितीति । ते तुभ्यम् । अपृष्टवते इति शेषः । अन्यथा न त्वदुत्प्रेक्षितनिमित्तानि न भवन्ति । अस्वरसानां तवैव स्फुरितत्वादिति भावः । भक्त्या भक्तिपूर्वकम् । तस्मात् भक्तियुक्तप्रश्नाभावकृतप्रतिबन्धस्यापगमात् । तत् ललितानामसहस्रम् ।। १३ ।। उक्तार्थे संमतिमाह— ब्रूयादिति । वक्तापृच्छकेन श्रोतृभिश्च तत्त्वबुभुत्सूनां सभा भवति तत्र वक्तृभिन्नाः सर्वेऽपि यद्यपि शिष्यास्तथापि रहस्यपदार्थस्य रहसि जनबाहुल्याभावे सत्येव वक्तव्यत्वादत्र शिष्यशब्देन पृच्छक एवावशिष्यत इत्याशयेन शिष्यायेत्युक्तम् । त्वयाप्येव वर्तितव्यमित्याशयेनाह । शिष्यायेत्यनुवर्तते । अभक्ताय पृच्छकायापि न देयमित्यर्थः । तेनापृच्छकायापि प्रश्नासमर्थाय भक्ताय देयमिति सिद्धयति ।। १४ ।।

अभक्तता[1]विवरणार्थां श्रुतिमर्थतोऽनुवदति— न शठायेति । 'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि । असूयकायानृजवेऽयताय न मां ब्रूया वीर्यवती तथा स्या' मिति हि श्रुतिः । तत्र गुरुभक्तिसमनन्तरमेव जातनिश्चयोऽपि यः पूर्वमेवैतज्ज्ञातचरमिति वा इदानीमपि न ज्ञातमिति वा प्रदर्शयितुं यतते ॥ शठो[2]ऽयतश्च ज्ञानं निश्चय गुरवे प्रदर्श्य तद्दूषणार्थमेवैदपर्येण यतमानो हेत्वाभासोपन्यासशीलो दुष्टोऽसूयकश्च । गुरु[3]र्भक्तिः सर्वाणि यथार्थवेति ज्ञानं विश्वासः स नास्ति यस्य सोऽविश्वासोऽनृजुश्च । यद्वा अ[4]यतोऽन्तःशुद्धिहीनः स चेह दुष्टपदेन संगृहीतः । एवं सति संप्रदायो माविच्छेदीत्यत आह— श्रीमात्रिति । भक्तितन्त्रे 'सा परानुरक्तिरीश्वरे' इत्यधिकरणादिषु निर्णीतलक्षणश्चित्तवृत्तिविशेषो भक्तिः तया युक्ताय । अनेनाभक्तनिरासः । न केवलं भक्तिमात्रमधिकारितावच्छेदकमिति द्योतनाय विशेषणद्वयम् । विद्याराजः पञ्चदशी तद्वेदनं गुरुमुखादुपदेशः ।। १५ ।। नित्यनैमित्तिककर्माचरणपूर्वकं सर्वत्र देव्यभेदभावनाख्या मानसी क्रियोपास्तिः तद्वानुपासकः । शुद्ध इति शाठ्यादिदोषराहित्याय । अथैतदुपदेशे ईदृशो निर्बन्धाश्च

> उपासकाय शुद्धाय देयं नामसहस्रकम् ।
> यानि नामसहस्राणि सद्यःसिद्धिप्रदानि वै ।। १६ ।।
> तन्त्रेषु ललितादेव्यास्तेषु मुख्यमिदं मुने
> श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथा परा ।। १७ ।।

रहस्यत्वात्तच्च मुख्यत्वात्तच्च देवताप्रीतिकरत्वेनावश्यकत्वादिति प्रदर्शयितुमुत्तरो ग्रन्थसंदर्भो नामारम्भाधिकः— यानीति । यानि कोटिसङ्ख्याकानि तेषु यानि सद्यःसिद्धिप्रदानि दश संख्याकानि 'एते दश स्तवा गङ्गाश्यामकाबालरामभे'ति संगृहीतानि ।। १६ ।। ललितादेव्या नामसहस्राणि तन्त्रेषु चतुःषष्टिसंख्याकेषु पुराणेषु च कथितानि तेष्वपीदं ललितानामसहस्रं मुख्यतममिति योजनयार्थः । 'देवानाम-

1. अभक्तानां 2. शठः 3. गुरुभक्तः 4. अयता

सहस्राणि कोटिशः सन्ति कुंभजे' त्युत्तरग्रन्थानुसारात्। पुंदेवत्या मन्त्राः स्त्रीदेवत्या विद्या इति मन्त्रविद्ययोर्लक्षणभेदे[1]ऽप्यस्याः शिवशक्तिसामरस्यरूपत्वादुभया- त्मतेति द्योतनाय मन्त्राणां मध्ये विद्येत्युक्तम्। अत एव देवताध्याने ऐच्छिको विकल्पः स्मर्यते। पुंरूपं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत्। अथवा निष्कलं ध्यायेत्सच्चिदानंदलक्षण'मिति मालामन्त्रेऽपि स्त्रीपुंसभेदेन भेदः। एतदभिप्रायेणैव गुणनिधिः श्रीमाता परंज्योतिरित्यादीनि नामानि त्रिलिङ्गकानि संपत्स्यन्ते। अथवा कूटत्रयात्मकत्वेऽपि पञ्चदशस्वरघटितत्वात्पञ्चदशाक्षरशालित्वसूचनाय मन्त्राणामित्युक्तम्। पिण्डकर्तरीबीजमन्त्रमालाभेदेन पञ्चविधेषु मन्त्रेषु पञ्चदशा- क्षराणां मन्त्ररूपत्वात्। तदुक्तं नित्यातन्त्रे। 'मन्त्रा एकाक्षराः पिण्डाः कर्तर्यो द्व्यक्षरा मताः। वर्णत्रयं समारभ्य नवार्णा विधिबीजकाः। ततो दशार्णमारभ्य यावद्विंशतिमन्त्रकाः। तत ऊर्ध्वं गता मालास्तासु भेदो न विद्यते' इत्यादि। कादिः ककार आदिर्यस्यां सा कादिः कालीशक्तिः। त इति तन्त्रराजप्रसिद्धकादि- नामकशक्तयभिन्ना वा। अत एव 'कादिसंज्ञाभवद्रूपा सा शक्तिः सर्वसिद्धये' इत्यादि तत्रैव देवीं प्रति शिववाक्यम्। सा च 'कामो योनिः कमला वज्रपाणिर्गुहा हंसा मातरिश्वाभ्रमिन्द्रः। पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्या' इत्याथर्वणैः पठ्यमानत्रैपुरसूक्तस्थायामृच्युद्धृता। तन्त्रभेदेनोद्धृतानां विद्यानां सर्व- वेदान्तप्रत्ययन्यायेनैक्येऽप्युपासकरुच्यनुसारेण कल्पितं तारतम्यमप्यस्तीत्याह— परेति। भावार्थप्रभृत्यर्थानां सर्वेषां तत्रैव सामञ्जस्यात्। सप्तत्रिंशदक्षरैः षट्- त्रिंशत्तत्त्वातीतरूपाय[2]ः कादिविद्यातिरिक्तास्[3]वसंभवाच्चेति भावः। तदिदमस्माभि- र्वरिवस्यारहस्य एव विद्यान्तरेषु तदसामञ्जस्यप्रदर्शनपूर्वं निरूपितम्। 'अज्व्य' ञ्जनबिन्दुत्रयनादत्रितयैर्विभाविताकारा। षट्त्रिंशत्तत्त्वात्मा तत्त्वातीता च केवला विद्या' इति। किंच 'यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः। रविताक्ष्र्येन्दुकंदर्प-

> पुराणां श्रीपुरमिव शक्तीनां ललिता यथा।
> श्रीविद्योपासकानां च [redacted] देवो वरः शिवः॥ १८॥
> तथा नामसहस्रेषु वरमेतत्प्रकीर्तितम्॥ १९॥
> [redacted] पठनाद्देवी प्रीयते ललिताम्बिका।
> अन्यनामसहस्रस्य [redacted] प्रीयते तथा।
> श्रीमातुः प्रीतये तस्मादनिशं कीर्तयेदिदम्॥ २०॥
> बिल्वपत्रैश्चक्रराजे योऽर्चयेल्ललिताम्बिकाम्।
> पद्मैर्वा तुलसीप[4]त्रैरेभिर्नामसहस्रकैः॥ २१॥

शंकरानलविष्णुभिः। यदेकादशमाधारं बीजं कोणत्रयात्मकम्। ब्रह्माण्डादिकटा- हान्तं जगदद्यापि दृश्यते' इत्यादेर्गुरुमुखैकवेद्यो रहस्यार्थो न हादिविद्यासु समञ्जसः।

---

1. भेदेन व्यवस्था 2. रूपतायाः 3. रिक्तविद्यास्व. 4. पुष्पै

